# हास्य-मधु-बिन्दवः


लेखकः

डॉ।। बा. श्री. रामकृष्ण रावः



ारती प्रकाशनम्

लूरु - ५६० ०८५

HASYA MADHU BINDAVAH - A collection of Sanskrit Jokes by **Dr. B. S. Ramakrishna Rao.,** Ex. Joint Editor, SAMVID, Bharatiya Vidya Bhavan, Mumbai - 400 007

pp. 40

Price : **Ten Rupees**



Copies : 500

First Edition : October 1998

Published by
**Surabharathi Prakashanam**
115/17, V Main Road
Poornaprajna Lay Out
Banashankari III Stage
Bangalore - 560 085

Printed by :
**Parimala Mudranalaya**
Hanumanthanagar, Bangalore-19
Ph. : 625516

DTP typeset courtesy
**Sri Atul Goradia**
Siddhi Printers, 13-14, Khetwadi,
13th Road, Mumbai-400 004

# इदमत्र निवेद्यते

भारतीयविद्याभवनस्य मेक्सिको-केन्द्रात् प्रतिनिवृत्तोऽहं मुम्बय्यां संविन्नामकसंस्कृत-त्रैमासिकपत्रिकायाः संपादनकर्मणि नियुक्त अभवम् । तदानीं केनापि कारणेन सा पत्रिका अप्रचलन्तीव आसीत् । सर्वप्रथमं तस्याः जीवापनं साम्प्रतिकत्व-समापादनं च मे प्रथमः कर्तव्यः अभूत् । एतदर्थं तथा च पत्रिकायाः वाचनीयतायाः अभिवृद्ध्यर्थमपि मया बहवः नूतनाः स्तम्भाः नवानि अङ्कणानि नानाविधाः लेखाः च विनिवेशिताः । समुचितानां लेखानामभावे वैविध्यसंरक्षणार्थं बधकटित्वेऽपि च मयि स्वयमेव नानाच्छद्मनामभिः पत्रिकाकुक्षिः पूर्यते स्म ।

ईदृशे स्वयं स्वीकृते कर्मणि मया विचारविहारः, शिशुगीतानि, हास्यमधु-विन्दवः, बालकथाः, लौकिकन्यायाः, अन्त्याक्षर्याः कृते सुभाषित-सङ्ग्रहः, सामयिका निबन्धाः, इतिवृत्तानि, लघुकथाः, पुस्तकपरिचयः, एवंरीत्या संस्कृतलेखने लेखनी व्यापारिता । गच्छता कालेन पाठकानां प्रतिक्रियाणां प्रोत्साहकारणात् ईदृशाः लेखाः यावच्छक्ति यथामति च अनुवर्तिताः ।

पाठकप्रवरेषु कानिचन मित्राणि प्रकाशितेषु लेखेषु बहवः पुस्तकरूपेण पुनः प्रकाशनमर्हन्तीति स्वाभिप्रायान् प्राचीकटन् । तत्परिणामत्वेन चास्माभिः संवित्संस्कृतग्रन्थमाला समारब्धा यत्र च प्रामुख्येन अभिनव-साहित्यस्यैव प्रकाशनं स्वीकृतम् । सेयं ग्रन्थमाला इदानीं लोकप्रिया सञ्जातेति प्रमुदितमानसोऽहम् ।

मुम्बयीजीवनेन जुगुप्सितोऽहं सकुटुम्बः स्वनगरं बेङ्गलूरुं प्रतिनिवृत्तः । प्रत्यागमनसमये संवित्पत्रिकायां मया विलिख्य प्रकाशितानां केषाञ्चन लेखानां पुस्तकरूपेण प्रकाशनं विधातुं कृतमतिरभवम् । भारतीयविद्याभवनस्य अधिकारिभिः सह वार्तालापः प्रवर्तते स्म एव । तथापि नूतनशालारम्भसमयः संप्राप्त इति सत्वरं स्वनगरं समागन्तव्यमभूत् ।

सिद्धि मुद्रणालयस्य स्वामिभिः श्री अतुल गोराडिया महोदयैः संस्कृत विषये, विशिष्य च ममोपरि, महती प्रीतिः महान् आदरः संरक्षितः प्रदर्शितश्च। तेषां साहाय्यात् ततश्च बेङ्गलूरुनगरे मम चिरकालसुहृद्भिः परिमलमुद्रणालयस्य श्री चिदम्बरस्य महोदयैः तत्पुत्रैः श्री प्रभाकरमहाभागैः अपि प्रदर्शित-प्रोत्साहकारणात् इदानीं मम केचन लेखाः प्रकाश्यमानाः सन्ति । भारतीयविद्याभवनं प्रति च अहं ऋणी अस्मि तस्य च साहाय्यहेतोः ।

अग्रिमेषु पृष्ठेषु अद्भुतं किमपि नास्तीति जानाति प्रकृतलेखकोऽपि । परं संस्कृतक्षेत्रे वाचनीयतां वर्धयितुं सरलसंस्कृतभाषया समुपनिबद्धानां लघुलघूनां लेखानां गद्यानां पद्यानां नाटकानां हास्यकणिकानां तथा च इतरभाषास्विव विविध-सामयिक-निबन्धानामपि आवश्यकता अस्तीत्येव मन्यमानोऽहं ग्रन्थप्रकटने आत्मानं व्यापारितवानस्मि । ईदृशपुस्तिकानां वाचनेन संस्कृतस्य प्रचारः भवतीति दृढोऽस्ति मे विश्वासः। संस्कृते अपि एवं रूपाणि कृत्यानि सम्भवन्तीति द्योतयितुं केवलं मे प्रयासः प्रवर्तते ।

'हास्यमधुबिन्दवः' इत्यस्मिन् लघुग्रन्थे मया संवित्पत्रिकायां प्राकाश्यं नीताः विंशत्युत्तरैकशतसंख्याकाः हास्यलघुकाः सङ्कलिताः सन्ति। यद्यपि सचित्रमेव ईदृशो ग्रन्थः प्रकाशनीयः तथापि धनाभावात् केवलं दिङ्मात्रप्रदर्शनार्थमपि मया अचित्रमेव प्रदीयतेऽधुना । अत्र मदीयं स्वोपज्ञं वा न किञ्चिदपि वर्तते । नानाभाषासु मया दृष्टाः हास्यकणिकाः संस्कृतीकृत्य अत्र प्रदत्ताः इति एतावदेव मे कृत्यम् । लोकेभ्यः स्वीकृतं लोकाय समर्पितं भवतु । कृपया वाचकाः पठित्वा स्वाभिप्रायं मे सूचयन्तु, येन उपकृतोऽहमवश्यं भवितास्मि । जनमनोविनोदार्थमेषां मधुबिन्दूनां पुनः प्रकाशनार्थं मम अनुमतिः अनावश्यकी इति सविनयं निवेदयामि ।

बेङ्गलूरु
1-10-1998

संस्कृतसेवाकर्मणि भवदीयः
वा. श्री. रामकृष्ण रावः

# हास्यमधुबिन्दवः

## भागधेयं नवोढस्य

विवाहो मे सुसम्पन्नः गृहिणी गृहमागता।
गृहं स्वर्गसमं जातं "स्वर्गवासो" ऽभवन्मम ॥

## आसीत् किमपि मित्रं ते?

"आसीत् किमपि मित्रं ते?"

"आसीत् पूर्वं परम् ......"

"परं किं मरणम्? ......"

"न हि नहि .... सः परिणीतः अभवत्।"

" कया सह? ..."

"मयैव सः ...."

## अधुना क्षालयाम्यहम्

कश्चित् अधिकारी स्वमित्रं रहसि अपृच्छत् - "किमिदं भोः! पूर्वं तव गृहे काचित् किङ्करी आसीत् या तव वस्त्राणि क्षालयति स्म। परमिदानीं त्वमेव वस्त्राणि स्वयं क्षालयसि कुतः?"

तन्मित्रमवदत् शीघ्रम् - "परिणीतास्ति सा मया। अतः तदीयवस्त्राण्यपि अधुना मया क्षाल्यन्ते नियतमेव" इति।

## चिरन्तनसमस्या

काचित् महिला अन्यां महिलाम् उद्दिश्य स्वीयां समस्याम् अधिकृत्य अभाषत एवम् - "यदा अहं स्नुषा आसं मम श्वश्रूः न मे रोचते स्म। इदानीं यदा अहं श्वश्रूः अस्मि मम स्नुषा मे न रोचते" इति।

## नाहमङ्गीकरोमि तत्

वैद्यवरः कदाचित् गर्भिणीं सम्यक् परीक्ष्य पतिदेवं जननायकम् अवदत् - "भवतः पत्नी अधुना अपत्यत्रयं प्रसविष्यति" इति।

जननेता झटिति प्रत्युदतरत् - "नहि नहि! पुनर्गणनार्थं याचिष्ये।" इति ॥

## क्व सत्यं निहितं भवेत् ?

ज्यायसी भगिनी - " अहमेव सर्वांगसुन्दरी इति मे पतिदेवः सर्वदा प्रशंसति।"

कनीयसी भगिनी - "अपेहि, अलीकवादिनि ! आवुत्तः मां सदा भणति 'त्वादृशी' सुन्दरी अस्मिन् जगतीतले नास्तीति।"

## प्रतीक्षां कर्तुमर्हसि

गृहात् गृहान्तरं गत्वा नूतनवस्तूनि विक्रीणन्ती काचित् तरुणी कस्यचित् गृहं गत्वा द्वारोद्घाटकं पुरुषम् अपृच्छत् - "भवतः पत्नी गृहमध्ये विद्यते वा?" इति।

गृहस्थः स्मित्वा साकूतं समवदत् - "अधुना नास्ति। सप्ताहं

यावत् मातृगृहं गतास्ति। तदागमनपर्यन्तं त्वमिहैव उषित्वा प्रतीक्षां कर्तुमर्हसि'' इति।।

## तदर्थं करवाणि किम्?

निर्वाचनभाषणानि परिसमाप्य स्वसदनं प्रतिनिवृत्तो जननेता निजपत्नीं प्राह - ''त्वमेव पुत्रकं सान्त्वयस्व। तस्य कृते सदृशे पादत्राणे अद्यापि न परिक्षिप्ते भाषणावसरे । तदर्थं करवाणि किम्?'' इति ।।

## कारणं किं भवेदिति?

सार्वत्रिकनिर्वाचनानां परिणामप्रकटनात् अनन्तरं पत्रकारः पराजितवन्तमपि प्रसिद्धचरं जननायकम् अपृच्छत् -

''भवतः पराजयस्य प्रमुखं कारणं किं भवितुमर्हतीति भवान् अभिप्रैति?''

''अहं बलिपशुः संवृत्तः। किमन्यत्'' आख्यातवान् नेता।

पत्रकारः चकितचकितं पुनः पृष्टवान् -

''कस्य बलिपशुः भवान्'' इति।

''समीचीनतया कृतायाः मतगणनायाः एव'' इति वदन् नेतृमहोदयः स्वस्थानं शून्यं चकार झटिति ।।

## प्रथमानुभवो मम

वैद्यं पश्यन् रोगी आह - ''मम तु इदानीं महती भीतिर्जायते यतः इयमेव मे प्रथमा शल्यचिकित्सा। '' इति। वैद्यः तं सांत्वयन् प्राह - '' आम्, भवतः मनोव्यथाम् अहं ज्ञातुं प्रभवामि । यतः ममाप्ययं प्रथमानुभवः शल्यचिकित्सायाः'' इति ।।

## तत्पूर्वं प्रतिजानीहि

कश्चित् न्यायाधीशः कदाचित् स्वस्य दन्तमेकं निर्मूलयितुमिच्छन् दन्तवैद्यसकाशं गत्वा निजगाद - ''मम दन्तस्य उत्पाटनात् प्राक् त्वं प्रतिजानीहि यत् त्वं मम एकं दन्तम् उत्पाटयसि, तमेव दन्तं सम्पूर्णतया उत्पाटयसि तथा च अन्यत् किमपि न उत्पाटयसि'' इति॥

## को नु हेतुर्भविष्यति

मध्ये वयसि वर्तमानः कश्चित् स्वोद्योगतः निवृत्तं स्वात्मानं घोषयामास मित्रवृन्दे । चकितचकितः मित्रवैधेयः अपृच्छदेनम् -

''त्वं तु मध्यवयस्कोऽसि
निवृत्तश्चेति तत्कथम्?
स्वेच्छा निवृत्तिरेषा किम्?''

-तदभिप्रायम् अनङ्गीकुर्वाणः मित्रवरः नीचैः निजगाद

''अपराधात् बलात्कृता॥''

## यथार्थभाषिणी प्राह

नग्निकेत्येव प्रसिद्धां काञ्चित् गणिकां गप्पप्रियायाः पत्रिकायाः वार्ताहरः कश्चित् साक्षाच्चकार। बहूनां प्रश्नानामन्ते ससङ्कोचं स अपृच्छदेव इत्थम् - तव नग्नस्थतायाः कारणं किमिति कथयितुं शक्यते वा?''

यथार्थभाषिणी रमणी प्राह - ''अत्र विशिष्टं तादृक् कारणं किमपि नास्ति। वस्त्र-धारणार्थं समय एव न भवति। यदा यदाहं प्रयते विटाः

कर्षन्ति केवलम् । विश्रान्तेरपि नो कालः कदा स्याद् वस्त्रधारणम्।।''

## तदधीनमिदं भवेत्

कस्मिंश्चित् भोजनगृहे इदं सम्भाषणं प्रवृत्तं ग्राहक - यजमानयोर्मध्ये-

''अस्माकं भोजनालयस्य खाद्यानि रुचिकराणि आसन् किम् ?''

''सत्यं सर्वमपि खाद्यजातं नितरां मिष्टम् इष्टं च। अहं तु अद्य अधिकमेव जग्धवान् ।''

''तर्हि पुनरपि अत्रागमनस्य कृपा क्रियताम् ।''

''इदं तु मम पत्नी एव निर्धारयितुं प्रभवति।''

## तदर्थं मातरं पृच्छ

**पुत्रः** पितः हिमालयः कुत्र अस्ति?

**पिता** - अहं न जाने । तव माता किं किं कुत्र कुत्र स्थापयतीति। अतः तदर्थं तामेव पृच्छ ।

## जानाति कालवशतः

**एकः** - तव पुत्रः दुष्टः अस्ति। सर्वदा असभ्याः असमीचीनाः गालीः ददाति सर्वेभ्यः।

**अपरः** - अधुना तस्य वयः कियत् । पञ्चषवर्षीयः केवलम् । गच्छता कालेन समीचीनाः गालीः ज्ञास्यति । कञ्चित्कालं प्रतीक्ष्यताम् ।

## सम्भ्रान्तिरनपेक्षिता

प्रियतमा काचित् प्रियकरं प्राह-

"अहं माता भविष्यामि अचिरात् ।"

इदं वच: श्रुत्वा संभ्रान्त: स: स्विन्नगात्रो बभूव ।

प्रियतमा सस्मितं सान्त्वयामास -

"अस्य नायमर्थ: यदहं गर्भिणी इति । परं तव पितरं परिणेष्यामि।"

## दु:खान्तं वा सुखान्तं वा?

"भवदीयं नूतनं चलच्चित्रं सुखान्तं वर्तते आहोस्वित् दु:खान्तम्?"

"चित्रपटगृहं जनै: पूर्णं चेत् सुखान्तं नो चेत् दु:खान्तमेव मे ।"

## किमिदं पापकर्म स्यात्?

"चौर्यं किं पापकृत्यं भवति?" - कोऽपि एवमेव अपृच्छत् ।

"नहि नहि चोरित्वा बध्यते चेत् पापं भवति"- नीचै: ध्वनिना अन्य: उदतरत् ।

## अभ्यन्तरं प्रविश भो:

कश्चित् युवा कदाचित् शैत्येन पीडित: औषधं लब्धुं रोगपरीक्षार्थं च वैद्यवरम् अन्विष्यन् तस्य गृहस्य द्वारि शब्दापयामास । वैद्यस्य पत्नी द्वारम् उद्घाटितवती ।

युवा अपृच्छत् - "वैद्यवर: गृहे अस्ति किम्?"

पत्नी प्राह - "नास्ति । अचिरात् गृहमेष्यति । अत: शीघ्रम् अभ्यन्तरं प्रविश त्वम् ।"

## एतत् प्रगतचिन्तनम्

पत्नीम् उत्थाप्य सहसा
साध्वसात् पतिरब्रवीत् ।
"किं ब्रवीमि पतिप्राणे
स्वप्ने तु विधुरोऽभवम् ॥"

"अब्रह्मण्यम्" अवोचत् सा,
"सत्यं निष्करुणो विधिः ।
वैधुर्यात् तव हे नाथ
वरं वैधव्यमेव मे ॥"

## को भेदस्त्वनयोः द्वयोः?

कश्चित् युवकः विद्वांसं कमपि पृष्टवान् "घटीयन्त्रस्य महिलायाश्च कः भेदः भवेत्" इति । स च उदतरत् एवम् - "यदि घटीयन्त्रं पश्यसि समयपरिज्ञानं भवति । यदि महिलां पश्यसि समयमेव विस्मरसि" इति ।

## अयं बालो न जानाति

**एकः** - युष्मत्पुत्रस्य बुद्धिः नास्ति । सः मां घोटकम् आह्वयत्।

**अपरः** - सत्यं तस्य बुद्धिः नास्ति । घोटकगर्दभयोः भेदमपि न जानाति ।

## एतत् मित्रस्य लक्षणम्

स्वपरिणयस्य निमन्त्रणपत्रं वितरन् एकः स्वमित्रं प्राह - "ममैव विवाहः वर्तते । त्वया अवश्यम् उपस्थातव्यम् ।"

मित्रम् उवाच - "आम् अवश्यम् आगमिष्यामि । ईदृशे प्रसङ्गे त्वाम् असहायं न करोमि । स सुहृद् व्यसने यः स्यादिति हि वदन्ति विदग्धाः।"

## कुत्र वा इष्यते इदम्

खाद्यापणे कदाचित् वार्तालापः प्रावर्ततैवम् ।

**क्रेता** - युष्माकमापणे शुनकानां बिस्कुटानि (Biscuits) विद्यन्ते वा?

**विक्रेता** - विद्यन्ते । अत्रैव अशनार्थं ददानि? उत गृहभोजनार्थं पिण्डीकृत्य प्रयच्छानि?

## तर्हि तन्नेष्यते मया

निरुद्योगः कश्चित् युवा साक्षाद्दर्शनावसरे केनचित् एवं पृष्टः अभूत् ।

"त्वं किं कार्यं कर्तुमिच्छसि?"

"अहं कर्मकरचयनसमितेरस्याः अध्यक्षकार्यं कर्तुमिच्छामि।"

"त्वम् उन्मत्तोऽसि किम्?"

"समितेरस्याः अध्यक्षो भवितुम् इयमर्हता अपेक्ष्यते चेत् मास्तु । नास्ति मे हानिः ।"

## लुण्टाकाः किं न कुर्वन्ति

दूराद् धावन् आगतः चोरः 'जीजामाता' उद्याने शुण्ठवरम् अपृच्छत् - "अत्र कोऽपि आहिण्डमानो आरक्षकः दृष्टः त्वया?" । "न खलु दृष्टः" उदतरत् शुण्ठः । "तर्हि झटिति तावकीनं सर्वस्वं

विमुच्य देहि । नो चेत् ....'' इति वदन् स चोरः पिस्तूलं प्रादर्शयत्।

## नाहं पश्यामि चक्षुषा

देवालयस्य पुरतः उपविष्टो भिक्षुकः कृपणस्वामिनं भिक्षां याचमानः निजगाद एवम् -

**भिक्षुकः** - ''स्वामिनः अन्धोऽहमस्मि । रूप्यकं यच्छत ।''

**कृपणः** - ''त्वमन्ध इति कथं वा विश्वसिमि?''

**भिक्षुकः** - ''तर्हि तत्र पश्यत । गोपुरमेकं गोचरीभवति ननु।'

**कृपणः** - ''आम् तत्रास्ते भव्यं गोपुरम् ।''

**भिक्षुकः** - ''परं तत् न मे दृश्यते ।''

## पुनरपि एकवारम्

जलतरणम् अजानानः कश्चित् कृपणः कदाचित् कथमपि कुल्याजले निपपात । साहाय्यार्थं ''रक्ष मां, रक्ष माम्'' इति उच्चैः चुक्रोश च । तस्य ध्वनिं श्रुत्वा तटस्थः कोऽपि ग्रामीणः सहसा जले प्लवित्वा तं तटमानीय ररक्ष ।

रक्षितः पुरुषः प्रोवाच - ''अहं तुभ्यं रूप्यकमेकं दातुम् अभिलषामि । मयि तु केवलं रूप्यकद्वयमितं नाणकमस्ति । किं करवाणि?''

ग्रामीणः प्रत्युवाच - ''चिन्ता मास्तु । भवन्तं कुल्यां प्रक्षिप्य पुनरपि एकवारं रक्षिष्यामि । तदानीमेव तत् रूप्यकद्वयनाणकं मह्यं प्रदीयताम् ।।''

## संख्याप्रमादः स भवेत्

अग्निशामकदलस्य कार्यालये कदाचित् घण्टानादे सति दूरभाषयन्त्रं स्वीकृत्य 'किमभूत्?' इति पृष्टवति कर्मकरे उत्तरं दत्तं ससंभ्रमध्वनिना -"कृपया सत्वरम् आगम्यताम् । भयङ्करः अग्निः विजृम्भते ।" कर्मकरः -"कुत्र?" । ततः ध्वनिः -"हृदये । क्व अन्यत्र?" एतावता श्रान्तः कर्मकरः "संख्याप्रमादः सञ्जातः" इति वदन् यन्त्रम् अधस्तात् प्राक्षिपत् ॥

## इदं त्वनुभवामृतम्

कीर्तनकारः कश्चित् परिवारनियोजनस्य आवश्यकताम् उपयोगितां च प्रतिपादयन् ग्रामीणानां मेलायां कदाचित् बह्वभाषत । तस्यैव कुटुम्बस्य जनबाहुल्यतां जानानः कोऽपि तं पप्रच्छ -"भवत एव बह्वपत्यता वर्तते इति जानीमः । एवं सति किमर्थं लघुकुटुम्बस्य परिवारनियोजनस्य गर्भनिरोधस्य च प्रचारः अस्मासु विधीयते?" इति ।

कीर्तनकारः अविचलितः सन् निजगाद तूर्णम् -"अतः खल्वहं प्रभवामि उपदेष्टुम् । अधुनातनकाले बह्वपत्यतामूलानि कष्टानि मया भृशमनुभूतानि । अतः कृत्वा ब्रवीमि 'एकापत्यं गृहं यस्य भवेत् सर्वं सुखं तस्य" इति ॥

## गोपालो ननु घूर्जरः

**पुत्रः** - हे पितः भगवान् श्रीकृष्णः गुर्जरदेशीयः आसीत् ननु!

**पिता** - कथमेवं सम्भावयसि?

**पुत्रः** - मीराबाई कथयति - मीरायाः प्रभुः गिरिधर नागरः इति। अस्माकं प्रतिवेशी अमृतलालनागरः घूर्जरः अस्ति । एवं ...

(गिरिधर नागरः) अपि घूर्जर एव भवितुमर्हति ।

## कस्याप्यन्यस्य चोरितम्

नूतनकार्यालयं गत्वा तस्य केवलं सप्ताहावधिः समाप्तः आसीत्। अतर्कितोपपन्नं त्यागपत्रं दृष्ट्वा तदुपरितनो अधिकारी आहूय अपृच्छत् कुतः एवं कृतमिति । स्वकर्मणः सहेतुकत्वं स्पष्टीकुर्वन् स कर्मकर आह ''नेदं वेतननिमित्तकं वर्तते । मम आत्मा मां सदा तुदति स्म । अत हेतोः एवं कृतवान् ।''

''आत्मा तुदति स्म । कोऽस्य अभिप्रायः?''

''सप्ताहपर्यन्तमपि मे एवं भासते स्म यदिदं कार्यं कुर्वता मया कस्यचित् मूर्खस्य मलिनस्य मन्दमतेः वराकस्य उदरंभरणकारणं चोरितमस्ति । स च कुत्रापि मां शपन् शेते ।'' इति॥

## नित्यमन्विष्यते सत्यम्

कृष्णमिश्रप्रभृतयः केचन पत्रकाराः प्रसिद्धं वैज्ञानिकं साक्षात्कर्तुं तस्य गृहम् अगच्छन् । वैज्ञानिकः क्वचित् बहिर्गत इति तत्रस्थं सेवकं कुतूहलतृप्तये अपृच्छन्– 'अरे भक्ताग्रेसर! भवतः स्वामिनः इमे वैज्ञानिकाः प्रत्यहं कस्य अन्वेषणं कुर्वन्तीति कथयसि वा?' इति ।

सेवकः सपदि प्रोवाच– ''यथा अहं जानामि ते प्रत्यहं प्रातरेव प्रबुध्य उपनेत्रस्यैव अन्वेषणं कुर्वन्ति ।'' इति ।

## न कालं वेत्ति कुक्कुरः

वीथ्यां चलन्तं कृष्णमिश्रं देशीयः कश्चित् शुनकः निर्दयम् अदशत् । स धावन् समीपस्थं चिकित्सालयं प्रविष्टः । वैद्यः कुपितः सन् कृष्णमिश्रं प्राह । ''अष्टहोरासमये चिकित्सालयः पिधीयते इति फलकं न दृष्टवान् किम्? गृहगमनोद्यते मयि इदानीमागतोऽसि?'' इति

। तदा कृष्णमिश्र आह– ''आम् जानामि । परं यः शुनकः मामिदानीमेव अदशत् सः भवतः समयसारणीं सम्यक् न अनुसरति चेत् किमहं करवाणि?'' इति ।

## अन्यत् किमपि पच्यताम्

''दिनत्रयात् पूर्वं आपणात् शाकमानेतुं गृहात् निर्गतः मे पतिदेवः अद्यापि न प्रतिनिवृत्तः न जाने किमहं करवाणि इदानीम्'' इति भार्यामणिः आरक्षकस्थानं गत्वा अवदत् । तदानीमेव सुप्तोत्थितः अधिकारी कृष्णमिश्रः ''तर्हि कियत्कालं प्रतीक्षसे? त्वमेव किमपि शाकान्तरं क्रीत्वा गृहं गत्वा पच'' इति परामर्शं प्रायच्छत् ।

## विश्वासयोग्या न नराः

कार्यालयप्रकोष्ठे काचित् सुमध्यमा प्रत्यग्रागतां कृष्णमिश्रस्य आप्तसचिवां सहचरीमवदत्– ''अयि नवाङ्गने! तुभ्यम् अनुभवः नास्ति। अतोऽहं ब्रवीमि । एते पुरुषाः न कदापि विश्वासयोग्याः भवन्ति। यदा कदापि संस्मृत्य विस्मृत्य वा, मनः परिवर्त्य, स्वपत्नीसमीपं गच्छन्ति'' इति ।।

## मुम्बय्यां मुख्यमस्ति किम्?

मुम्बईनगरे अन्धकारपुरीतः चतुष्पट्टीं प्रति यास्यन् कृष्णमिश्रः कदाचित् लुण्टाकेन गृहीतः अभवत् । तदा एवं सम्भाषणं प्रावर्तत–

**लुण्टाकः**– अरे रे... पुत्र, धनपेटिकां देहि । नो चेत् तव शिरः खण्डयिष्यामि ।

**कृष्णमिश्रः**– अस्तु रे पाटच्चर । त्वं मे शिर एव खण्डय । अस्मिन् नगरे शिरोविहीनाः अपि जीवितुं प्रभवन्ति । न कथमपि निर्धनाः ।

## पठितुं पुस्तकान्यपि

कृष्णमिश्रः यथाकथमपि स्ववासार्थं किमपि गृहं निर्मापितवान् । तत्र पुस्तकानां कृते एकं प्रकोष्ठं पृथक् संरक्षितवान् । पुस्तकसंग्रहार्थं विद्याभवनस्य ग्रन्थापणं गत्वा बहूनि चित्वा अन्ते आपणस्वामिनं प्राह ।– "इदं धनं स्वीकुरु । मया चितान् सर्वान् ग्रन्थान् गृहं प्रेषय । एवमेव पठनार्थं कानिचन पुस्तकान्यपि त्वमेव चित्वा प्रेषय । निद्रायाः कृते पुस्तकानि औषधायन्ते इति मे वैद्यः कथयति" इति ॥

## शक्तिर्नास्ति प्रजाजने

सर्वेषु उत्कोचकाण्डेषु अपराधित्वेन निर्णीतः कश्चित् खादीधारी नेता पत्रकारान् आहूय स्वीयं निर्णयम् उदघोषयत् यत् सः आगामिनि निर्वाचने स्पर्धितुं नोत्सहते इति । तदा कश्चित् नूतनः वार्ताहरः अपृच्छत्– "किं कारणं भवेत् ईदृशकठोरनिर्णयस्य इति कथयितुं शक्यते वा?" आजन्मराजकारणपटुः प्राह– "इदानीं मां विजयिनं विधातुं प्रजाभ्यः शक्तिः नास्ति" इति ॥

## विहाय मे शिरः, सर्वम्

दीर्घकालिकेन रोगेण पीडितः कृष्णमिश्रः वैद्यसकाशं गत्वा पथ्यविषये पुनः पप्रच्छ–

"तैलभर्जितं किञ्चित् अश्नामि किम्?"

"न न । तैलभर्जितं नैव भोक्तव्यम् ।"

"रोटिकाः पोलिकाः वा?"

"खाद परम् अल्पप्रमाणेन केवलम् ।"

"आम्लकं चटनीं वा स्तोकमिव?"

"भवेत् परमधिकं नैव ।"

"सर्षपशाकं,पिच्छिलं दधि?"

"मम: शिर: एकं विहाय अन्यत् सर्वं यथेष्टं भुंक्ष्व। अपेहि इत: प्रथमम्"— वैद्य: जगर्ज।

## कदापि न तथा कुर्वे

**पुत्रः**— शारदा अङ्कगणिते केवलम् एकमेव अङ्कं प्राप्तवती। परं सा तं शोधित्वा परिवर्त्य द्वौ इति अङ्कितवती।

**माता**— मन्ये त्वं तथा न करिष्यसि।

**पुत्रः**— न न। अहं कदापि न तथा करिष्यामि। यत: पूर्वमेव मया एकस्य पार्श्वे शून्यं विलिख्य दशत्वेन परिवर्तितमस्ति।

## आनेष्याम्यहमेव तत्

**चोरः**— भट महाशय, मुहूर्तम् अवसरं देहि। अहमापणं गत्वा सिगरेटमानयामि।

**कृष्णमिश्रः**— मां मूर्खं मन्यसे किम्? न कथमपि शक्यते मां प्रतारयितुम्। त्वमत्रैव तिष्ठ। अहमेव आपणं गत्वा सिगरेटं ते आनेष्यामि।

## शिरस्त्राणं क्व वर्तते

**महिला**— त्वमेव मम पुत्रं जलात् रक्षितवान् ननु।

**कृष्णमिश्रः**— (सगर्वम्) आम्। अहमेव स: यस्ते पुत्रं मरणात् रक्षितवान्।

**महिला**— तर्हि कथय तस्य शिरस्त्रं कुत्र वर्तते?

## श्वः कार्यमद्य कुर्वीत

"मात: अपरमपि मोदकं मह्यम् अधुनैव प्रयच्छ" इति बाल: मातरं प्रार्थयत्।

"न न, श्वः दास्यामि तुभ्यमेव" इति माता सान्त्वयामास ।

तदा पुत्रः प्रत्यवदत्– "अम्ब त्वमिदानीमेव मां पाठितवती यत् 'श्वः कार्यमद्य कुर्वीत' इति । अतः तत्कार्यमहम् अधुनैव समापयितुमिच्छामि" इति ।

## भाषान्तरमिदं कथम्?

मद्रपुर्याः मूरमार्केटे जीर्णग्रन्थापणे संस्कृतपुस्तके कदाचित् दृष्टं, दृढं खल्वहं स्मरामि एवम्–

**Eng:** George the Fifth is ruling over us.

**संस्कृतम्: जारजः पञ्चमः** अस्मान् शास्ति । मन्ये ब्रिटिशाः इदं नैव अवागच्छन्निति ॥

## देशभक्तिप्रकारोऽयम्

**एकः** - सखे त्वमात्मानं देशभक्तं मन्यसे । परेभ्यः देशभक्तेः उपदेशमपि विधास्यसि । परं वैदेशिकीं धूमवर्तिकां कुतः सेवसे?

**देशभक्तः** - अरे त्वमेतावदपि नावगच्छसि । इदं वैदेशिकं वस्तु । अतः खलु भस्म कुर्वन्नस्मि ।

## दण्डेन सह पानीयम्

**पुत्रः** - अम्ब एकं चषकं जलं देहि ।

**माता** - अधुनैव पीतवानसि । पुनः पृच्छसि चेत् दण्डेन ताडयामि।

**पुत्रः** - दण्डमानेतुं यदा गच्छसि तदा पानीयमपि आहर अम्ब ।

## एतत् हासस्य कारणम्

विमानं च तत् आकाशमध्ये उपर्युपरि वेगेन उड्डयते स्म । अकस्मादेव चालकः उच्चैः हसितुम् आरभत च । सर्वे यात्रिणः चकिताः भूत्वा हास्यकारणम् अपृच्छन् ।

हसन्नेव चालकः अवदत् "अहं तु उन्मत्तानां चिकित्सालयात् धावित्वा आगतोऽस्मि ।

यदि ते अधिकारिणः इदं जानन्ति तदा किं वा कुर्युः इति तान् विचिन्त्य हसामि ।"

## व्रतपालनकारणम्

**एकः** - अस्तु मित्र । अधुना गृहं तु गच्छामि । नो चेत् मम पत्नी विनाभोजनं प्रतीक्षमाणा तिष्ठति ।

**अपरः** - किं सत्यम्? त्वादृशो भाग्यशाली अस्मिन् काले को वा अन्यः भवेत्? सा त्वयि कियत् प्रेम रक्षति किल ।

**एकः** - आम् । वस्तुतस्तु गमनानन्तरमहं पचामि । ततः एव आवाभ्यां भोक्तुं शक्यते ।

## गृहे द्रष्टुं कदा शक्यम्?

**डित्थः** - अहं त्वां गृहे द्रष्टुमिच्छामि । कदा भवान् तत्र लभ्यते?

**डपित्थः** - यस्मिन् काले मम पत्नी बहिः गता भवति अथवा सुप्ता तिष्ठति ।

## मदीयापि समस्या सा

**एकः** - अरे मित्र! अनर्थः जातः। मम पत्नी प्रियतमा च सममेव आगच्छतः स्तः पश्य । न जाने किं करवाणि ।

**अपरः** - इयमेव मम समस्या अपि अस्ति ।

## दौर्भाग्यान्मे तथा ह्यभूत्

**पत्नी** - नाथ! विवाहात् प्राक् त्वमुक्तवान् आसीः यत् 'त्वया विना स्वर्गः मे मास्तु । त्वया सह नरक एवास्तु' इति किं स्मरसि तत्?

**पतिः** - मम दौर्भाग्यान्मे अधुना तथैवाभूत् ।

## कदाचित्, न तु सर्वदा

**चैत्रः** - किं त्वं तरणं कर्तुं प्रभवसि?

**मैत्रः** - प्रभवामि परं तदा तदा ।

**चैत्रः** - अस्य को वा अर्थः?

**मैत्रः** - अस्य अयमर्थः यत् यदाहं जले अस्मि तदा केवलं तर्तुं प्रभवामीति ।

## स्वपन्नासं तया सह

**चैत्रः** - त्वमिमां तरुणीं जानासि किम्?

**मैत्रः** - जानामि, तया सह अहमपि स्वपन्नासं किल ।

**चैत्रः** - एवं वा? कुत्र? कदा?

**मैत्रः** - महाविद्यालये मराठीवर्गेषु ।

## अन्यत् कार्यं न विद्यते

द्वौ बालकौ हिन्दीचित्रपटमेकं द्रष्टुं गतवन्तौ । अन्ते ताभ्यामेवं निर्णीतं यत् प्रौढेभ्य: वृक्षप्रदक्षिणं विहाय अन्यत् किमपि कार्यं न विद्यते इति ।

## धर्मशास्त्रं प्रमाणं चेत्

**वेश्या** - आवयो: संगम: साधो पुन: कुत्र भविष्यति ?

**साधु:** - धर्मशास्त्रं प्रमाणं चेत् कुम्भीपाके भविष्यति ॥

## पूर्वं दत्वा निपीयताम्

कण्डिलशौण्डिक्या: पानागारे सूचनाफलके एवं लिखितमासीत्-

यदि भवन्त: आत्मन: विस्मर्तुम् आकण्ठं पातुमिच्छन्ति तदा शोभनम् । यावदपेक्षितं पीयताम् । परं तस्मादपि पाक् कृपया धनं दीयताम् ।

## भवान् परिचितो नास्ति

**डित्थ:** - हे स्वामिन्! मह्यं शतरूप्यकाणाम् ऋणं देहि कृपया ।

**डपित्थ:** - ऋणं पृच्छसि? परं न खलु त्वामहं जानामि ।

**डित्थ:** - अत: कृत्वैव पृच्छामि खलु । सुष्ठु परिचित: को वा मे ऋणं दद्यात्?

## एतदस्ति भयं मम

**एका** - यदा यदा मे पतिः गृहं स्वर्गं कर्तुं वार्तालापं करोति तदा मम भयं जायते ।

**अपरा** - अत्र भयस्य कारणं किमस्ति?

**एका** - तदा अहं चिन्तयामि यन्मे पतिः विवाहविच्छेदनम् अभिलषतीति ।

## ततो रक्षां करोति कः?

चित्रपटनिर्देशकः नवागतायै अभिनेत्र्यै प्रसङ्गं विवृणोति स्म । "तारामणे त्वमस्यां नद्यां पतसि । तदा नायकोऽयं समागत्य, साहसं विधाय, त्वां रक्षित्वा, स्कन्धयोः उपरि वहन् तत् भवनं याति ।"

नायिका गभीरभावनया पृष्टवती- "अस्तु अनन्तरं मां कः रक्षिष्यति?"

## इदं ज्ञातुं पठाम्यहम्

दशवर्षीयः बालः एकाग्रमनसा एकं पुस्तकं पठति स्म । यदा माता आगत्य पश्यति तत् पुस्तकं शिशूनां लालनपालनविषयकम् आसीत् । सा पृष्टवती - "वत्स इदं पुस्तकं त्वं किमर्थं पठसि । त्वमद्यापि बालः खलु ।" पुत्रः अवदत् - "एतदर्थमेव अहं पठन्नस्मि । यतः अहं ज्ञातुमिच्छामि यत् त्वं मां सम्यक् लालयसि पालयसि वा नवेति ।"

## अस्मिन् विश्वस्यते यदि

**न्यायाधीशः** - भवान् विवाहविच्छेदनं किमर्थम् इच्छति?

**पतिः** - आर्यमिश्राः शृणुत । अहं पञ्च पुत्रान् अपेक्षितवान् । अनया तु अहम् एकपुत्रः कृतः ।

**न्यायाधीशः** - अस्तु, त्वं किं वक्तुमिच्छसि ।

**पत्नी** - यदि अयमेव अवलम्ब्यते स्म तर्हि एकोऽपि पुत्रः न अजनयिष्यत् ।

## कमुद्योगं करिष्यामि?

**डित्थः** - अहमल्पेन समयेन अधिकं धनं प्राप्तुमिच्छामि । तदर्थं कः उपायः?

**डपित्थः** - राजकारणक्षेत्रम् अवतर ।

**डित्थः** - तत्रापि धनार्जने विलम्बः भवति । अन्यमुपायं ब्रूहि ।

**डपित्थः** - तर्हि गुण्डो भव । धनिकानां तद्बन्धूनां वा अपहरणं कुरु ।

## अयमेषां भवेद् भेदः

**कृष्णमिश्रः** - अरे मित्र त्वमिदं कथं अभिजानासि यत् तव आपणे क्रयार्थं ये आयान्ति तेषु पतिपत्न्यौ कौ? प्रियप्रियतमे कौ इति?

**आपणिकः** - इदं झटिति अवगम्यते । यदि परस्परं वादः मया सहापि वाग्वादः प्रचलति तदा अवश्यं पतिपत्न्यौ भवतः । विना वार्तालापमपि यदि सत्वरं क्रीणीतः तदा अनूढदम्पती एवेति ।

## नाहं ददाम्यवसरम्

**एका** - सखि! तव नववरः सुन्दरः सुरूपः आकर्षकश्च आस्ते ।

परं यदा सः हसति तस्य दन्तपंक्तिः सुष्ठु न दृश्यते ।

**अपरा** - चिन्ता मास्तु । विवाहोत्तरं तस्मै हसितुम् अवसर एव न भविष्यति ।

## गुरोस्तत्र, गृहे पितुः

कृष्णमिश्रः आंग्लभाषामध्येतुं मम्मीड्याडीशालां प्रवेशितः । तत्र गुरुः उक्तलेखनं वदन् 'मै हेड्' इत्यस्य अर्थं 'मम शिरः' इति बोधितवान् । कृष्णमिश्रः "मै हेड् अर्थात् गुरोः शिरः" इति लिखित्वा गृहे रटति स्म । इदं श्रुत्वा कुपितः पप्पा प्रावोचत् - "अरे मूर्ख मै हेड् इत्यस्य अर्थः मम शिरः, न तु गुरोः शिरः" इति । यदा शालायां कृष्णमिश्रः मै हेड् इत्यस्य अर्थं 'पितुः शिरः' इति अवदत् तदा गुरुः समीचकार "न न, मै हेड् इत्यस्य अर्थः मम शिरः" इति । भ्रान्तः कृष्णमिश्रो अन्ते एवं लिलेख - "मै हेड् इत्यस्य अर्थः शालायां 'गुरोः' शिरः, गृहे तु 'पितुः' शिरः" इति ।

## त्वयाप्येवं निगद्यताम्

**कान्तामणिः** - भवान् तु अतीव सुन्दरः सरलः साधुः च । मम भाग्यवशादेव मे भवादृशः पतिः लब्धः ।

**पतिवराकः** - सत्यम्! एवं किमु? यदि मयापि एवं वक्तुं शक्यते स्म तदा शोभनं खलु अभविष्यत् ।

**कान्तामणिः** - कथ्यताम् । भवानपि अहमिव असत्यं वदतु । का हानिः?

## इयं साधारणी वार्ता

**मन्त्रिमहोदयः** - रे सम्पादक! मम विरोधे भ्रष्टाचारस्य वार्तां प्रकटयितुं कियत् धैर्यं ते?

**सम्पादकः** - क्षम्यतां स्वामिन्। सा अन्या पत्रिका स्यात्। वयम् ईदृश-साधारण-वार्ताः न प्रकटयामः।

## तादृशी त्वं न वर्तसे

"स्वीयः प्रियपुत्रः छात्रालयात् प्रतिनिवृत्तः अस्ति खलु?" - कृष्णमिश्रः पत्नीं पप्रच्छ।

क्षणमात्रेणैव इदं कथं ज्ञातमिति सम्भ्रान्ता सा अपृच्छत् - "कथं ज्ञातं भवता?"

"मम वस्त्रकोशात् धूमवर्तिका चोरिता वर्तते। जानामि खलु यत् त्वं तादृशी नासि इति।"

## तादृशी लभ्यते नैव

पानागारे मित्रयोः संवादः।

**एकः** - अहं मम पत्नीं परित्यक्तुं निर्णयं स्वीकृतवान्।

**अपरः** - किं कारणम्?

**एकः** - मासषट्कात् सा मया सह वार्तालापं न कृतवती वर्तते।

**अपरः** - मित्र साधु विचिन्तय। तादृशी गुणवती पत्नी न सर्वस्मै लभ्यते।

## स एवास्तीति हेतोः किम्?

नवोढा काचित् सगर्वं सखीमाह -

"अहं मम पतिं न पीडयामि । वस्त्रक्षालन-यन्त्रम् आनय, उलूखलयन्त्रमानय, संमार्जनयन्त्रम् आनय... इत्यादीत्यादि ।" सखी पप्रच्छ - "स एव सर्वं कार्यं सम्पादयति इति कारणेन वा?"

ततः पूर्वा नीचैर्ध्वनिना अपरामाह - "न न, यदा यदा इदं वदामि, सः मम पित्रे पत्रं विलिख्य धनं याचते ।"

## पतिर्हि परदैवतम्

कृष्णमिश्रस्य पत्नी महिलां कामपि उद्दिश्य उपदेशं यच्छति स्म - "न न, पत्युः गालीः न देयाः । सः दैवतमिति मन्तव्यः । मामेव पश्य मम पतिः अयोग्यः, निष्क्रियः, अलसः, दरिद्रः, दुराचारः अपि वर्तते । तथापि अहं तं निन्दामि किम्? "तत्रापि विशिष्य अन्यासां पुरतः?"

## मर्कटात् मानवः किमु?

शालायां विकासवादं विदित्वा गृहं धावित्वा कृष्णमिश्रः मातरं पप्रच्छ - "अम्ब विज्ञानस्य अध्यापकः वदति यत् मानवाः मर्कटात् उत्पन्नाः इति । किमिदं सत्यम्?"

पतिदेवं पश्यन्ती पत्नी उदतरत् - "तव पितुः पूर्वजान् नाहं दृष्टवती । अतः न खलु प्रभवामि समीचीनतया वक्तुम् ।"

## त्वं तथा मन्यसे, किन्तु...

कृष्णमिश्रः कमपि हस्तसामुद्रिकनिपुणम् अन्विष्य हस्तं प्रसार्य पृष्टवान् - "कथय मे चरितमिति ।"

'त्वं द्वयोः पुत्रयोः पितासि' निजगाद निपुणः ।

"न न त्रयंः पुत्राः मे"-कृष्णमिश्रः कथितवान् ।

निश्चिन्तमनसा निपुणः अब्रवीत् - "तथा त्वं मन्यसे ।"...

## प्राणानेव प्रदास्यामि

कृपणाग्रेसरचक्रवर्तीति प्रसिद्धः श्रेष्ठी मरणशय्यामामासीत् । विप्रवराकः कृष्णमिश्रः इदानीं वा किमपि पैसकं प्रयच्छेदिति भ्रान्त्या श्रेष्ठिवर्यमुपादिशत् - "अधुना किमपि दानधर्मादिकं कुरु । देवालयस्य कृते, गोपुरार्थं वा, निर्धनेभ्यः इति वा दानं कुरु । जनाः त्वां सदा स्मरिष्यन्ति । भगवानपि शोभनमेव ते करिष्यति" इत्यादि ।

"धनं प्रदेयमिति उपदिशसि?"

"आम् भगवत्कृते किल प्रदेयम्!"

"धनं गृहीत्वा भगवान् किं कुर्यात्? धनापेक्षया बहुमूल्यान् मदीयान् प्राणानेव भगवते प्रदास्यामि ।"

इत्युक्त्वा स श्रेष्ठी चक्षुषी निमील्य तूष्णीम् अतिष्ठत् ॥

* *·*

## किं नु काञ्चनमिष्यते?

**गृहस्थः** - "स्वामिन्! भवताम् अस्य गृहस्य छत्रात् वृष्टिः पतति। कृपया पुनर्योगः (Repair) कार्यताम्।"

**गृहस्वामी** - "अरे किं ब्रूषे? भाटकार्थं प्रदत्ते गृहे किं कनकधारा वर्षति?"

## दोषस्तस्यैव वर्तते

**गुरुः** - गोपाल! पुनरपि त्वं यथापूर्वम् अशुद्धमेव लिखितवानसि। अतोऽहं ते पित्रे आख्यास्यामि।

**शिष्यः** - तेन किमपि प्रयोजनं नास्ति। वस्तुतस्तु इदम् अशुद्धं लेखनं मम पित्रा एव लिखितम्।

## परीक्षा सुलभा, किन्तु...

**पिता** - अद्य परीक्षा आसीत् किल! सुलभा कठिना वा सा?

**पुत्रः** - परीक्षा सुलभा आसीत्। किन्तु नावगतं मया।

## वेणुं प्रतिगृहाण त्वम्

**बालः** - हे आपणक! इमं वेणुं नाहं ग्रहीष्यामि। त्वमेव प्रतिगृहाण। त्रुटितं वेणुं दत्तवानसि।

**विक्रेता** - रे वत्स! ब्रूहि कुत्र भिन्नः अयं वेणुः?

**बालः** - अत्र पश्यत। बहवः रन्ध्राः अत्र विद्यन्ते।

## स तु उत्पद्यते मयि

**चैत्रः** - मैत्र! यदा यदा अहं त्वया सह वार्तालापं करोमि तदा मम शिरसः भारः अपयाति । शिरोरोगः अपि अपगच्छति सत्यम् ।

**मैत्रः** - सत्यम्, अवितथम् । परं तदनन्तरं मम शिरोरोगः सञ्जायते ।

## इदमेतस्य कारणम्

**डित्थः** - स्थूलाः पुरुषाः किमर्थं सर्वदा मृदुमधुरमेव वचनं वदन्ति?

**डपित्थः** - कुत इति चेत् कटुभाषणं कृत्वा झटिति पलायनं कर्तुं न खलु ते प्रभवन्ति ।

## तत्कृतं तस्य सेवकैः

**गुरुः** - गोविन्द! कथय ताजमहलं कः निर्मितवान्?

**गोविन्दः** - गुरो! अकबरः तत् निर्मितवान् ।

**गुरुः** - न न, विचिन्त्य सम्यक् कथय ।

**गोविन्दः** - आम्! अकबरः तत् न निर्मितवान् । तत्तु तस्य सेवकैः निर्मितम् ।

## वराकः स मरिष्यति

**ग्राहकः** - रे माणवक! मम तुषारसारे (ice cream) मक्षिका वर्तते ।

**माणवकः** - चिन्ता मास्तु भोः । स वराकः शैत्यात् मरिष्यति सत्वरम् ।

## अहं तस्य गृहस्तेनः

**न्यायाधीशः** - त्वं सर्वदा गणेशस्य गृहे एव किमर्थं चोरयसि?

**चोरः** - भगवन्! अहं तस्य गृहचोरः अस्मि ।

## तदलीकं न शक्यते

**स्वामी** - रे शुक यदहं वच्मि तदेव पुनः वद ।

अहं चलितुं प्रभवामि ।

**शुकः** - अहं चलितुं प्रभवामि ।

**स्वामी** - अहं वक्तुं प्रभवामि ।

**शुकः** - अहं वक्तुं प्रभवामि

**स्वामी** - अहं डयितुं प्रभवामि ।

**शुकः** - तदसत्यं न शक्यते ।

## द्वितीयमेव मे देहि

**गोपालः** - अस्य बिस्कुटस्य कति पैसकाः ।

**विक्रेता** - एकस्य कृते पञ्चदश । द्वयोः कृते पञ्चविंशतिः पैसकाः । अर्थात् द्वितीयस्य केवलं दश पैसकाः ।

**गोपालः** - तर्हि गृहाण दश पैसकाः । मह्यं द्वितीयं बिस्कुटमेव देहि ।

## अयमेष पदार्थोऽस्ति

**गुरुः** - आतपे यं द्रष्टुं न शक्नुमः तादृशः पदार्थः कः?

**शिष्यः** - अन्धकारः स वर्तते ।

## जनको भीरुरस्ति मे

**गोपालः** - मम पिता अतीव भीरुः वर्तते ।

**गोविन्दः** - कुतः त्वं तथा मन्यसे?

**गोपालः** - यतः वीथीतरणावसरे सः मम हस्तम् अवलम्बते शालागमनसमये ।

## कलहं करवाणि किम्?

**गुण्डः** - मातः अहं शम्भुलिङ्गेन सह क्रीडितुं गच्छामि किम्?

**माता** - मा मा गच्छ । सः दुष्टः बालः वर्तते ।

**गुण्डः** - एवं चेत् गत्वा तेन सह कलहं करवाणि वा?

## अपरः स तु मण्डूकः

**अध्यापकः** - जले स्थले च चलनयोग्यस्य एकस्य प्राणिनः नामधेयं भण ।

**गुण्डः** - मण्डूकः ।

**अध्यापकः** - साधु । अधुना अपरस्य नाम वद ।

**गुण्डः** - अपरः मण्डूकः ।

## अधिकं क्रियते स्म भोः

**गुण्डः** उद्योगम् अन्वेष्टुं नूतनं कार्यालयं गतवान् । तत्र प्रधानः प्रबन्धकः तम् अपृच्छत् ।

**प्रबन्धकः** - कियतां वर्षाणाम् अनुभवः तवास्ति?

**गुण्डः** - पञ्चविंशतिवर्षाणाम् अनुभवः ।

**प्रबन्धकः** - किं ते वयः?

**गुण्डः** - चत्वारिंशत् वर्षाणि ।

**प्रबन्धकः** - कथं ते इयान् अनुभवः?

**गुण्डः** - अहं चिरं कार्यवेलायाः अपि अधिकं कालं यावत् कार्यं कृतवान् ।

## इदं मदीयं सदनम्

एकदा गुण्डस्य तत्पत्न्याश्च कलहः अधिकः जातः । सा दर्वीमादाय ताडयितुम् आगता । तदानीम् -

**गुण्डः** - ए ए ए मा ताडय । दर्वी भग्ना भवति ।

**पत्नी** - इयं मदीया दर्वी । यत्किमपि भवतु किं ते?

**गुण्डः** - उपायान्तरम् अपश्यन् मञ्चस्य अधस्तात् विलीनः अभवत् । तदानीम्-

**पत्नी** - रे रे रे भीरो । बहिरागच्छ । तत्र कुतः तिष्ठसि?

**गुण्डः** - इदं मदीयं गृहम् । अहं यत्र कुत्रापि तिष्ठामि किं ते?

## विक्रीतमेव सुबहु

संस्कृतसाहितीकारं कृष्णमिश्रं वार्ताहरः कश्चित् अपृच्छदेवम्-

**वार्ताहरः** - भवद्भिः पुस्तकानि विरचितानि प्रकाशितानि च सन्ति किल । कियन्ति विक्रीतानि?

**कृष्णमिश्रः** - बहूनि खलु विक्रीतानि - गृहवस्तूनि यथा मञ्चकः, पीठिका, आसन्दी, मम भार्यायाः स्वर्णाभरणानि च ।

## अपरा किमु वर्तते?

धनिको धनपतिः गृहमागतं वरं प्रति ब्रूते स्म । ''मम विंशतिवर्षीयायाः कुमार्याः नामनि विंशतिलक्षरूप्यकाणि, पञ्चविंशति वर्षीयायाः कुमार्याः नामनि पञ्चविंशतिलक्षरूप्यकाणि, त्रिंशद्वर्षीयायाः कुमार्याः नामनि त्रिंशल्लक्षरूप्यकाणि वित्तकोशे शाश्वतनिधित्वेन निहितवानस्मि ।''

वरमहाशयः अपृच्छत् नीचैरेव ध्वनिना ''भवते चत्वारिंशद्वर्षीया कुमारी न वर्तते वा?''

## मित्रेणैतत् भविष्यति

अपुत्रको डपित्थः ज्यौतिषिकं पृष्टवान् - मम पुत्रप्राप्तिः अस्ति वा नवेति । पत्न्याः जन्मपत्रं दृष्ट्वा सः अवदत् अवश्यं ते पुत्रप्राप्तिः भविष्यति, परं मित्रवरस्य साहाय्येन ।

## न जाने कीदृशो रोगः

कृष्णमिश्रः कार्यालये विरामवेलायां भोजनं कुर्वन् सहकर्मिणे सदानन्दाय अवदत् - ''मम भार्या स्वस्मै एव भाषमाणा तिष्ठति

सर्वदा । न जाने किमिदम् उन्मत्तता, मूर्खता, शिवलीला वा इति ।''

सदानन्दोऽपि स्वानुभवम् अब्रवीत् - "मम पत्नी अपि तथैव कुरुते । परं सा मनुते यदहं शृण्वन् अस्मीति ।''

## कुशलिन्येव पुत्रकाः

शालां गच्छन्तः केचित् चपलाः बालाः गर्दभैः वस्त्राणि जलाशयं वाहयन्तीं रजकभार्यां दृष्ट्वा विनोदार्थम् अपृच्छन् - "हे गर्दभानां मातः! अपि कुशलिनी भवती ।'' सा च तूर्णं कथितवती - "अहं सकुशलास्मि मे पुत्रकाः'' इति ।

## दास्यामि द्विसहस्रकम्

"दशसहस्ररूप्यकाणां धनकोशः (Purse) कुत्रापि अनुपलब्धिं गतः । यदि कश्चित् अन्विष्य मे दास्यति रूप्यकसहस्रं पारितोषिकं प्रदास्यते'' इति पत्रिकाप्रकटनं पठित्वा कृष्णमिश्रः परेद्यवि तस्यां पत्रिकायां विज्ञापिकां प्रादात् - "अहं द्विसहस्ररूप्यकाणि दास्यामि तदर्थम्'' इति ।

## त्वदीयं मतमस्ति तत्

**ज्यौतिषिकः** - गुण्ड, अपत्यद्वयमस्ति ते ।

**गुण्डः** - न न त्रयः सन्ति ।

**ज्यौतिषिकः** - त्वदीयं मतमस्ति तत् ।

## पुत्रस्य भारः दृष्टो वा

**गृहिणी** - मम पुत्रेण सह एक-किलोमितं द्राक्षाफलं

प्रेषणीयमासीत् । सर्वं धनं स्वीकृत्य अल्पमेव प्रेषितवन्तः । तुलायाः भारशिलाः समीचीनाः सन्ति वा?

**विक्रेता** - अस्माकं तुला समीचीनैव । इतः प्रतिगमनानन्तरं भवत्पुत्रस्य भारः सम्यक् लक्षितोऽस्ति वा?

## न जाने पितृपूर्वजान्

**बालः** - अम्ब मम गुरुः वदति यद्वयं वानरात् समुद्भूताः इति सत्यं वा तत्?

**माता** - (पतिं पश्यन्ती) तदहं सुष्ठु न जाने वत्स । तव पितामहादयो न मया दृष्टाः ।

## सत्यं भणामि भो वैद्य

**वैद्यः** - किं त्वं मन्यसे यत् - क्यारेटशाकभक्षणेन दृष्टिः वर्धते इति?

**रोगी** - सत्यं भिषग्वर । न कोऽपि शशकः उपनेत्रं (चश्मा) उपयुंक्ते ननु ।

## एकं विहाय सर्वेऽपि

**पिता** - किं सत्यं तव कक्षायां सर्वेऽपि उत्तीर्णाः परीक्षाम्?

**पुत्रः** - सत्यं सर्वेऽपि केवलमेकं विहाय ।

**पिता** - कः सः एकाकी?

**पुत्रः** - अस्माकम् अध्यापकः ।

## एतदेतस्य कारणम्

**तरुणः वैद्यः** - किमर्थं भवन्तः सर्वदा रात्रौ किं भुक्तम् रात्रौ किं भुक्तम्? इति रोगिणः पृच्छन्ति?

**अनुभवी वैद्यः** - इदमेतदर्थं यत् तस्य आहारं विदित्वा शुल्कं ग्रहीतुं शक्यते इति ।

## चिकित्सको विजानीयात्

**चैत्रः** - मैत्र मम तु शिरोरोगः समुत्पन्नः । महती वेदना वर्तते । एहि कञ्चित् वैद्यं प्रति गच्छावः ।

**मैत्रः** - मास्तु मास्तु । यदि त्वं वैद्यस्य सकाशं गच्छसि तदा सोऽपि ज्ञास्यति यत् तव शिरः रिक्तं वर्तते इति ।

## नैव कुप्यन्ति सज्जनाः

**पुत्रः** - पितः सज्जनाः कुप्यन्ति किम्?

**पिता** - न खलु ते कुप्यन्ति ।

**पुत्रः** - भवानपि सज्जनो ननु । अतः गृहाण इदं मे परीक्षा-परिणाम-पत्रम् । अहमस्मिन् वर्षेऽपि अनुत्तीर्णः । कृपया मा कुप्य ।

## तथापि नैव विश्वासः

**गृहस्वामी** - मम गृहस्य सर्वासां लोहपेटीनां (Almirahs) कीलकानि (Keys) तव हस्ते दत्तानि । तथापि त्वं मन्यसे यन्न त्वयि विश्वासः वर्तते इति?

**सेवकः** - आ एवम् । यतः न कस्यामपि पेटिकायां किमपि महार्घं वस्तु विद्यते ।

## सङ्केतं तस्य मे वद

**डित्थः** - अहमद्यैव अनामकं पत्रमेकं प्राप्तवान् ।

**डपित्थः** - केन तत् लिखितं भण ।

## विभज्य देहि दशकम्

**विक्रेता:** - त्रुटितानि अत्रुटितानि वा अण्डानि अपेक्षितानि ब्रूहि । त्रुटितस्य मूल्यं रूप्यकमेकम् । अत्रुटितस्य च रूप्यकद्वयम् ।

**क्रेता** - तर्हि त्रुटित्वा दश अण्डानि देहि मे ।

## अहमण्डानि नेच्छामि

**वरुणः** - अरुण त्वम् अण्डानि नेच्छसि किम्?

**अरुणः** - न खलु मे रोचन्ते ।

**वरुणः** - किमर्थं नेच्छसि? अण्डम् आरोग्यं जनयतीति वैद्या वदन्ति ।

**अरुणः** - परीक्षासु सर्वदा अण्डानि मे लभ्यन्ते इति हेतोः अहं तानि नेच्छामि ।

## को वा दशति पुच्छेन

**पिता** - वत्स! तस्य शुनकस्य पुच्छं मा आकर्षय । कुपितः सः त्वां दशति ।

**वत्सः** - पितः! मा अलीकं ब्रूहि । न कोऽपि शुनकः पुच्छेन दशति ।

## कोप एवावशिष्यते

**गुरुः** - गुण्ड! यदि ते पितः पञ्चशतरूप्यकाणि तव मात्रे दत्वा शतद्वयं प्रतिगृह्णाति तदा कियत् अवशिष्यते ते मातृहस्ते ।

**गुण्डः** - यदि मे पिता तथा करिष्यति कोप एव अवशिष्यते ।

## मध्येमार्गं चलसि चेत्

**गुण्डः** - अनेन पादचारिमार्गेण चलामि चेत् शीघ्रं चिकित्सालयं गन्तुं शक्यते किम्?

**शुण्ठः** - न न । तदर्थं मार्गस्य मध्यभागे चल ।

## अश्नामि स्वेदकं धृत्वा

**वत्सः** - अम्ब अहं तुषारसारम् (Ice cream) अशितुम् अभिलषामि ।

**माता** - न न शैत्यं ते भविता ।

**वत्सः** - तर्हि स्वेदककञ्चुकं (Sweater) धृत्वा अश्नामि ।

## पुनर्योगं कुरुष्व भोः

नूतनां द्विचक्रिकां क्रीत्वा निर्गतः गुण्डः कतिपयेष्वेव दिवसेषु तमेव आपणं गत्वा अवदत् ।

**गुण्डः** - एकं वर्षं यावत् यत्किमपि भग्नं चेत् पुनर्योगं (Repair) कृत्वा दास्यामीति उक्तवान् आसीः ।

**विक्रेता** - सत्यम् । किमिदानीं भग्नमस्ति?

**गुण्डः** - मम दक्षिणः पादः ।

## तदलीकं महत्तरम्

पादकन्दुकक्रीडापटू द्वौ दैनन्दिनम् अभ्यासं परिसमाप्य गृहं प्रतिगच्छन्तौ स्वस्व-प्रावीण्यविषये भाषमाणौ आस्ताम् ।

**एकः** - प्रपूर्वेद्युः अहं कन्दुकं पादेन प्रहृतवान् । स च दिनत्रयानन्तरमेव अधः अपतत् ।

**अपरः** - तत् किमपि महत् नास्ति । गतमासे मया प्रहृतः कन्दुकः विंशतिदिनेभ्यः अनन्तरं भूमौ न्यपतत् । तेन सह पत्रमपि एकं संलग्नमासीत् । तत्र एवं लिखितम् । "पुनः कदाचित् चन्द्रलोकं प्रति कन्दुकः आयास्यति चेत् सः न प्रति प्रेषयिष्यते" इति ।

## अनृतं वदति भ्राता

**गोविन्दः** - गोपाल! पूर्वेद्युः त्वं कुत्र गतवान्?

**गोपालः** - अहं मैसूरुनगरं गतवान् ।

**गोविन्दः** - तव भ्राता अवदत् यत् त्वं मद्रपुरीं गतवानिति ।

**गोपालः** - मास्तु चिन्ता । सोऽपि अनृतमेव अवदत् ।

## अहमद्य द्वितीयोऽस्मि

**गुण्डः** - अम्ब अद्य स्पर्धायां द्वितीयोऽहम् अभवम् ।

**माता** - साधु साधु । कथय कियन्तः स्पर्धालवः आसन् ।

**गुण्डः** - द्वौ एव ।

## सुशीला सुगुणा, किन्तु...

विवाहात् प्राक् पुढारी पुट्टप्पः स्वाभिलषितकन्यायाः गुणशीलादिकं परीक्षितुं गूढचर-साहाय्यं स्वीकृतवान् । मासात् ऊर्ध्वं सः एवं इतिवृत्तं प्राप्तवान् । "इयं कन्या सुगुणा सुशीला च वर्तते । परं केनचित् दुःशीलेन पुढारिणा सह तस्याः मैत्री विद्यते" इति ।

* * *

## *Books By Dr. B. S. Ramakrishna Rao*

### SANSKRIT

| | | |
|---|---|---|
| 1. | संस्कृतगद्यलेखावली | 25-00 |
| 2. | पद्यमणिमाला | 20-00 |
| 3. | गद्यरत्नमञ्जूषा | 30-00 |
| 4. | सुभाषितसमुच्चयः (संग्रहः) | 15-00 |
| 5. | हास्यमधुबिन्दवः (हास्यलघुकाः) | 10-00 |
| 6. | तिलोत्तमा (अनुवादः) | 5-00 |
| 7. | निबन्धनवनीतम् (सहलेखनम्) | 12-00 |
| 8. | रसहृदयतन्त्रम् (सहसम्पादनम्) | – |

### KANNADA

| | | |
|---|---|---|
| 9. | ಸಂಸ್ಕೃತ ಪ್ರಚಾರಕ್ಕೆ ಕೆಲವು ರಚನಾತ್ಮಕ ಸಲಹೆಗಳು | – |
| 10. | ಸೂಕ್ತಿ ರತ್ನಗಳು | – |
| 11. | ಆಧುನಿಕ ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯಕ್ಕೆ ಕರ್ನಾಟಕದ ಕೊಡುಗೆ | 20-00 |
| 12. | ಭಾರತೀಯ ವಿದ್ಯೆ (ಅನುವಾದ) | 9-00 |
| 13. | ಸಂಸ್ಕೃತ : ಭಾಷೆ ಮತ್ತು ಸಾಹಿತ್ಯ (ಸಹಲೇಖನ) | 12-00 |
| 14. | ಸಂಸ್ಕೃತ ಪತ್ರಿಕೋದ್ಯಮ (ಸಂಪಾದಿತ) | 25-00 |
| 15. | ಮಹಾಭಾರತದ ಮೂಲಕಥೆ ಮತ್ತು ಮುಖ್ಯ ಪಾತ್ರಗಳು (ಅನುವಾದ) | 25-00 |
| 16. | ಗೀತಾ ಪಾಠಾವಳಿ (ಭಾಗ-೧) (ಅನುವಾದ) | 30-00 |
| 17. | SARALA SAMSKRITA SHIKSHAKA (Parts 6, 7 & 8) English Translation | 30-00 |

### OTHERS

Edited many journals, souvenirs and books.
Written a number of articles in English,
Kannada and Sanskrit.